| | कोष्ठः | कोष्ठः | कोष्ठः | कोष्ठः | अतिरिक्तकोष्ठः— |
|---|---|---|---|---|---|
| | १ | २ | ३ | ४ | ५। |
| द्विगुणाङ्काः,— | १ | २ | ४ | ८ | १६ |
| | | ३ | ६ | १२ | |
| | | ५ | १० | १४ | |
| | | ९ | ७ | १५ | |
| | | | ११ | | |
| | | | १३ | | |

अथ प्रथमद्वितीयकोष्ठस्थयोः द्व्येकाङ्कयोः योगेन जातं त्रयं द्व्यङ्कादधः, प्रथमतृतीयकोष्ठस्थयोः चतुरेकाङ्कयोः योगेन जातं पञ्च त्र्यङ्कादधः, तथा प्रथमचतुर्थकोष्ठस्थयोः एकाष्टाङ्कयोः योगे जातं नव पञ्चाधः स्थापयेत्। पुनः द्वितीयकोष्ठस्थेन द्व्यङ्केन सह तृतीयकोष्ठस्थितचतुरङ्कस्य योगेन जातं षडङ्कं द्वितीयकोष्ठस्थचतुरङ्कात् अधः, द्व्यङ्केन सह चतुर्थकोष्ठस्थाष्टाङ्कस्य योगात् दश षडङ्काधः स्थापयेत्; षोडशस्य अन्तिमाङ्कत्वात् तेन योगो न कार्य्यः। ततः द्वितीयपङ्क्तिस्थेन त्र्यङ्केन सह चतुर्योगे जातं सप्त दशाङ्काधः विन्यसेत्। "एकत्र लिखितं प्राज्ञः पुनरन्यत्र नो लिखेत्" इति शास्त्रात् पञ्चाङ्केन चतुर्योगो नैव कर्त्तव्यः। ततश्च त्र्यष्टयोगे एकादश सप्ताधः लिखेत्। त्रिषोडशयोगो न भवति, अन्तिमाङ्कत्वात्। पञ्चाष्टयोगे त्रयोदश एकादशाधः स्थापयेत्। पुनश्चतुरष्टयोगे द्वादश षष्ठाधः निवेशयेत्। चतुःषोडशयोगो न कार्य्यः। षडष्टयोगे चतुर्दश द्वादशाधः। दशाष्टयोगो न कार्य्यः। सप्ताष्टयोगे पञ्चदश चतुर्दशाधः। तथा च सति प्रथमस्थाने सर्वगुरुः द्वित्रिपञ्चनवस्थानेषु त्रिगुरवः एकलघवो वा; चतुःषड्दशसप्तैकादशत्रयोदशसु स्थानेषु द्विगुरवः द्विलघवो वा। अष्टद्वादशचतुर्दशपञ्चदशस्थानेषु एकगुरुस्त्रिलघवो वा। षोडशस्थाने सर्वलघुरिति बोध्यम्। तथा चोक्तम्—"एको द्वावथ चत्वारस्ततोऽष्टाविति वर्त्तनम्। पूर्वं परेण संयोज्य तदधो लेखयेत् बुधः॥ अन्तिमाङ्कावधिं नैव लङ्घयेदत्र कुत्रचित्। एकत्र लिखितं प्राज्ञः पुनरन्यत्र नो लिखेत्॥" इति।

पञ्चाक्षरपताका यथा—

| कोष्ठाङ्काः,—१। | २। | ३। | ४। | ५। | ६ अधिककोष्ठः |
|---|---|---|---|---|---|
| १ | २ | ४ | ८ | १६ | ३२ |
| | ३ | ६ | १२ | २४ | |
| | ५ | १० | २० | २८ | |

| | | | |
|---|---|---|---|
| ९ | १८ | १४ | ३० |
| १७ | ७ | २२ | ३१ |
| | ११ | २६ | |
| | १९ | १५ | |
| | १३ | २३ | |
| | २१ | २७ | |
| | २५ | २९ | |

षट्स्वरपताका यथा—

| कोष्ठाङ्कः,—१। | २। | ३। | ४। | ५। | ६। | ७ अतिरिक्तकोष्ठः |
|---|---|---|---|---|---|---|
| १ | २ | ४ | ८ | १६ | ३२ | ६४ |
| | ३ | ६ | १२ | २४ | ४८ | |
| | ५ | १० | २० | ४० | ५६ | |
| | ९ | १८ | ३६ | २८ | ६० | |
| | १७ | ३४ | १४ | ४४ | ६२ | |
| | ३३ | ७ | २२ | ५२ | ६३ | |
| | | ११ | ३८ | ३० | | |
| | | १९ | २६ | ४६ | | |
| | | ३५ | ४२ | ५४ | | |
| | | १३ | ५० | ५८ | | |
| | | २१ | १५ | ३१ | | |
| | | ३७ | २३ | ४७ | | |
| | | २५ | ३९ | ५५ | | |
| | | ४१ | २७ | ५९ | | |
| | | ४९ | ४३ | ६१ | | |
| | | | ५१ | | | |
| | | | २९ | | | |
| | | | ५३ | | | |
| | | | ४५ | | | |
| | | | ५७ | | | |

उद्दिष्टसङ्ख्याः एकद्वित्रिपञ्चाष्टत्रयोदशाद्याः अङ्काः क्रमेण स्थाप्याः, ततो वामावर्त्तेन सर्वान्तिमम् अङ्कं तत्पूर्वाङ्केन लोपयेत। एकेनाङ्केन अन्तिमाङ्कलोपने एकगुरुः, अन्तिमलोपे द्विगुरुः, त्रिभिरन्तिमाङ्कलोपे त्रिगुरुरित्यादिरूपमायाति। यथा—षट्कलप्रस्तारे एकद्वित्रिपञ्चाष्टत्रयोदशाङ्काः स्थाप्याः, ततः सर्वापेक्षया परवर्त्तिनि त्रयोदशाङ्कावयवे तत्पूर्ववर्त्तिना अष्टाङ्केन लुप्ते अवशिष्टाः पञ्च, तत्र पञ्चाङ्कस्य तत्पूर्वत्र विद्यमानत्वात् अष्टमाङ्कलोपात् परकलया गुरुभावाच्च पञ्चमाङ्केन पङ्क्तिक्रमो विधेयः। तथा च पञ्चमस्थाने (- - - - ७) एवं स्वरूपम् एकगुरुर्विद्यते इति ज्ञानं पताकाफलम्। तथा चोक्तं प्राकृतपिङ्गले—"उद्दिट्ठे सिरअंका थप्पह वामावत्ते परलइ लुप्पह। एकलोप एकगुरु आण दुइतिणिलोपे दुइतिणि जाण॥ मत्तपताका पिंगल गाव जो पावइ सो परिहि बुझाव॥" इति। संस्कृतं यथा—"उद्दिष्टसदृशाङ्काः स्थाप्या वामावर्त्तेन परं गृहीत्वा लोपयेत्। एकलोपे एकगुरुमानय द्वित्रिलोपे द्वित्रान् जानीहि॥ मात्रापताकां पिङ्गलो गायति यः प्राप्नोति स परं बोधयति॥" इति।

### अथ वर्णमर्कटिका।

एकाक्षरादिषड्विंशत्यक्षरावधिवर्णप्रस्तारेषु कति वृत्तादयो भवन्ति इति प्रश्ने कृते वर्णमर्कटिकया प्रत्युत्तरं देयम्। तस्याश्च साधनप्रकारः प्रदर्श्यते—तत्र षट्पङ्क्तिकमेकाक्षरादिषड्विंशत्यक्षरसङ्ख्यया कोष्ठकं विधाय प्रथमायां वृत्तपङ्क्तौ एकादिकान् षड्विंशतिपर्य्यन्तानङ्कान् स्थापयेत्। एवञ्च प्रथमा वृत्तपङ्क्तिः सिध्यति। ततो द्वितीयायां प्रभेदपङ्क्तौ पूर्वस्थापिताङ्काधः उत्तरोत्तरद्विगुणान् द्व्यादिकान् अङ्कान् विन्यसेत्। एवं कृते द्वितीया प्रभेदपङ्क्तिः सिध्यति। ततः क्रमप्राप्तामपि तृतीयां मात्रापङ्क्तिमुल्लङ्घ्य तदग्रभूतां चतुर्थीं वर्णपङ्क्तिं दर्शयति। द्वितीयपङ्क्तौ द्विचतुरष्टादिक्रमेण स्थितानङ्कान् प्रथमपङ्क्तिस्थितैः एकद्वित्रिप्रभृतिभिरङ्कैर्गुणयित्वा क्रमेण चतुर्थ्यां पङ्क्तौ द्व्यष्टचतुर्विंशत्यादिक्रमेण स्थापयेत्। एवं चतुर्थ्यां वर्णपङ्क्तौ लिखितायां पञ्चम्यां षष्ठ्याञ्च गुरुलघुपङ्क्त्योः चतुर्थपङ्क्तिस्थितार्द्धाङ्कान् एकचतुर्द्वादशादिकान् स्थापयेत्। एवं गुरुलघुरूपे पञ्चमषष्ठपङ्क्ती सिध्यतः। ततः पञ्चमपङ्क्तिस्थितान् एकचतुर्द्वादशादिकानङ्कान् चतुर्थपङ्क्तिस्थितान् द्व्यष्टचतुर्विंशत्यादिकानङ्कांश्चैकीकृत्य त्रिद्वादशषट्त्रिंशादिरूपान् तृतीयायां मात्रापङ्क्तौ स्थापयेत्। एवं कृते अवशिष्टा तृतीया मात्रापङ्क्तिः सिध्यति। एतेन तावत् एतत् बोद्धव्यं—प्रथमपङ्क्तिप्रथमकोष्ठे एकाङ्कस्य विद्यमानत्वेन एकाक्षरवृत्तमिति। तदधः द्वितीयपङ्क्ति[illegible]मकोष्ठे द्व्यङ्कस्य स्थिततया तस्य द्वौ भेदौ इति। तृतीयपङ्क्तौ प्रथमकोष्ठे त्र्यङ्कस्य

स्थितत्वेन तत्र च मात्राः तिस्रः (। ऽ) एकगुरोर्द्विमात्रत्वात् एकलघोश्च एकमात्रत्वादित्यभिप्रायः। तथा चतुर्थ्यां पङ्क्तौ प्रथमकोष्ठे द्व्यङ्कस्थितेः तत्र द्वौ वर्णौ इति लाभः। पञ्चमपङ्क्तौ प्रथमकोष्ठे एकाङ्कस्थितेः तत्र एकलघुः, तथा षष्ठपङ्क्तौ प्रथमकोष्ठे एकाङ्कस्य स्थित्या तत्र एकगुरुरिति सिद्धिः। ततश्च एकाक्षरप्रस्तारवशात् एकाक्षरवृत्तस्य द्वौ भेदौ. १। (।) २। (ऽ), तेन मात्रा-त्रयम्, एकः गुरुः एकः लघुरत्येवं द्वौ वर्णौ च इति ज्ञातव्यम्। एवं द्वितीयादिकोष्ठेषु द्व्यक्षरादीनां क्रमेण सङ्ख्या-भेद-मात्रा-वर्ण-गुरु-लघुपदैः षट्सु पङ्क्तिषु कोष्ठाङ्केर्वेदितव्यम्। सुखबोधाय चांशिकं कोष्ठप्रदर्शनमप्यत्र क्रियते। यथा—

| | | | | | | |
|---|---|---|---|---|---|---|
| वृत्तपङ्क्तिः | १ | २ | ३ | ४ | ५ | ६ |
| प्रभेद „ | २ | ४ | ८ | १६ | ३२ | ६४ |
| मात्रा „ | ३ | १२ | ३६ | ९६ | २४० | ५७६ |
| वर्ण „ | २ | ८ | २४ | ६४ | १६० | ३८४ |
| गुरु „ | १ | ४ | १२ | ३२ | ८० | १९२ |
| लघु „ | १ | ४ | १२ | ३२ | ८० | १९२ |

अनया रीत्या षड्विंशत्यक्षरपर्यन्तं कोष्ठः कल्पनीयः। तथा चोक्तं—"पिङ्गला-दिभिराचार्यैर्यदुक्तं नं वर्णमर्कटीम्। एकाक्षरादिषड्विंशत्यक्षरावधिलक्षिताम्॥ ग्रन्थैरनतिविस्तीर्णैः प्राकृतैरवहट्टकैः। वक्ष्ये लक्ष्यसमायुक्तां पञ्चमे प्रत्यये स्थिताम्॥ छप्पंती पत्थार करिज्जसु अक्खरसंखे कोट्ठ धरिज्जसु। पहिली पंति वण्ण धरिलिज्जसु दोसरि पंति दुण परिदिज्जसु॥ उप्परअंकगुणिअ करिलेहि चौठी पंति सोइ लिहि देहि। चौठी अङ्का पंचमी पंति सोइ छठमा लिहु णिब्भंति॥ पंचमी चौठो तिचहि मिलाउ पिंगल जंपै अंक फलाउ। बित्त पभेअ मत्त वण्ण वखाइ गुरु लहु जाणिअ एम सपखाइ॥ अक्खरमक्कडि जाणहु सोइ जिहिं जाणे मणआणंद होइ। जो बुज्झइ सोइ पइज्झइ मक्कडिजाली छन्दिअ वज्झइ॥ लक्कीपाहेव कहै एम मक्कडिआए पत्थवो। पेक्खह बम्ह कुंडं मक्कडिअंसुह अवाकडम्॥" इति। संस्कृतं यथा—"षट्पङ्क्त्या प्रस्तारं कुरु अक्षरसङ्ख्यया कोष्ठकं धारय। प्रथमायां पङ्क्तौ वर्णान् धारय रचय द्वितीयायां पङ्क्तौ द्विगुणान् परिदेहि॥ उपर्यङ्कैः गुणयित्वा रचय चतुर्थ्यां पङ्क्तौ तानेव लिखित्वा देहि। चतुर्थ्यङ्कान् पञ्चम्यां पङ्क्तौ तानेव षष्ठ्यां लिख निर्भ्रमम्॥ पञ्चमीं चतुर्थीं तृतीयायां मेलय पिङ्गलो जल्पति अङ्कं

लिख्यति। वृत्तानि प्रभेदान् मात्राश्च वर्णान् गुरून् लघून् जानीहि तेन सम्यग्यान् ॥ अक्षरमर्कटीं जानीत लोकाः! यस्यां ज्ञातायां मनस आनन्दो भवति। यो बुध्यते स एव प्रतिबुध्यते मर्कटीजाले कवी बध्यते ॥' लक्ष्मीनाथेन कथिते अत्र मर्कटिकायाः प्रबन्धे। पश्यत वर्ण—॥ श्रीलक्ष्मीनाथभट्टेन नारायणतनूभुवा। वर्णमर्कटिका प्रोक्ता पञ्चमे प्रत्यये स्थिता ॥" इति।

शिक्षार्थिनां भूयोज्ञानाय पूर्वप्रदर्शितस्य खण्डमात्रामेरुरिति संज्ञान्तरस्य मात्रामेरोः भिन्नविधा प्रकारविन्यासप्रणाली प्रदर्श्यते—

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| | | | | | | | १ | १ |
| | | | | | | १ | १ | २ |
| | | | | | | २ | १ | ३ |
| | | | | | १ | ३ | १ | ५ |
| | | | | | ३ | ४ | १ | ८ |
| | | | | १ | ६ | ५ | १ | १३ |
| | | | | ४ | १० | ६ | १ | २१ |
| | | | १ | १० | १५ | ७ | १ | ३४ |
| | | | ५ | २० | २१ | ८ | १ | ५५ |
| | | १ | १५ | ३५ | २८ | ९ | १ | ८९ |
| | | ६ | ३५ | ५६ | ३६ | १० | १ | १४४ |
| | १ | २१ | ७० | ८४ | ४५ | ११ | १ | २३३ |
| | ७ | ५६ | १२६ | १२० | ५५ | १२ | १ | ३७७ |
| १ | २८ | १२६ | २१० | १६५ | ६६ | १३ | १ | ६१० |
| ८ | ८४ | २५२ | ३३० | २२० | ७८ | १४ | १ | ९८७ |

मात्रावृत्तेषु कत्येकगुरवः कति द्विगुरवः इत्यादि ज्ञानार्थं खण्डमात्रामेरुः कार्यः। तत्प्रकारो यथा—उपरि एकः कोष्ठः लेख्यः, तदधस्तात् दक्षिणे वामे वा अतिक्रान्तैककोष्ठं कोष्ठद्वयवत् पङ्क्तिद्वयं, तस्याधस्तात् तद्वदेव कोष्ठत्रयवत् पङ्क्तिद्वयं, तदधोऽपि तथैव कोष्ठचतुष्टयवत् पङ्क्तिद्वयम् इत्येवंरूपेण यावदिच्छं लिखेत्। एवं कोष्ठेषु लिखितेषु वामभागे अन्त्यकोष्ठेषु एकद्वि-एकत्रि-एक-चतुरादिक्रमेण एकान्तरेण एकोत्तरवृद्ध्या अङ्काः विन्यस्याः। दक्षिणभागे अन्त्य-कोष्ठेषु सर्वत्र एकाङ्का लेख्याः। मध्ये कोष्ठे स्वोपरिस्थकोष्ठाङ्केन तदुपरिस्थ-कोष्ठपुरःस्थितकोष्ठाङ्कं संयोज्य पूर्ववत् विन्यसेत्। यथा—प्रथमपङ्क्तौ एक-

कलस्य, द्वितीयपङ्क्तौ त्रिकलस्य, तृतीयपङ्क्तौ त्रिकलस्य इत्येवंक्रमेण न्यासः कार्यः; सर्वगुर्वेकगुर्वादिकथनस्य पूर्ववदेव कर्तव्यम्। प्रस्तारसङ्ख्याज्ञानार्थं प्रतिपङ्क्ति तत्तत्पङ्क्तिस्थितानां सर्वाङ्कानामैक्यीकरणेन जातमङ्कं दक्षिणभागस्थैकाङ्कात् परतो लिखेत्। तथा च—"आदावेकं न्यसेत् कोष्ठे तदधः पङ्क्तियुग्मके। द्वौ द्वौ च तदधस्त्रींस्त्रीनेवंरूपेण वर्द्धनम्॥ अन्त्यकोष्ठेषु सर्वेषु प्रथमाङ्कं न्यसेत् सुधीः। आदौ चैकं ततो द्वौ च पुनश्चैकं ततस्त्रयम्॥ एकान्तरस्य ह्यङ्कमेवंरूपेण पूरणम्। मध्यकोष्ठं ततः प्राज्ञैः पूरणीयं शिरःस्थितैः॥ शिरःस्थितोर्द्ध्वकायाङ्कमैक्यीकृत्य प्रपूरयेत्। एवंक्रमेण शिष्टः स्यान्मात्रामेरुर्न संशयः॥" इति।

## मात्रामर्कटिका।

अथ प्राकृतपिङ्गले श्रीलक्ष्मीनाथभट्टोक्ता मात्रामर्कटी प्रदर्श्यते—"जा पिंगलेण कइणा ण णिबद्धा अप्प गंथम्मि। तं मत्तामक्कडिअं लच्छीणाहेण विरइअं भणइ॥ मत्तासंखे कोट्ठ करु पंतिच्छअ पत्थारि। तत्थ दुआदिकअंका धरि पढमहि पंति विचारि॥ आइ अंक परितज्जि कइ सव्वहु पंतिभ्भारि। पुव्वजुअलसरि अंक धरु बीओ पंति विचारि॥ पढमपंतिठिअअंककरि बीजी पंति गुणेहि। जो जो अंका जहँ पराहि तं तिअ पंति भणेहि॥ पढमे बीअं अंकं बीए कोट्ठे अ पंचमं अंकम्; देऊण बाणहिट्ठअं तहिट्ठअं तीअचौत्थए देह॥ काऊण एक्कभावं पंचमपंतिट्ठिए अंके। देऊण एक्कमंकं कुणेहि तेणव्व पंचमं पुण्णम्॥ तज्जिअ पंचममंकं पुव्वाखं एक्कभावमावस्स। देऊण एक्कमधिकं छट्ठं कुणेहि परिपुण्णम्॥ काऊण एक्कभाव पंचमपंति ट्ठआण अंकाण। तज्जिअ पंचदहंकं एक्कं देऊण कुणसु सुथिरकोट्ठम्॥ एव्वं णिरवहिमत्तापत्थारे अक्करिज्जौ। होइ त्ति तेण कइणा ण कओ अंकाण वित्थारो॥ एव्वं पंचमपंति पुण्णं काऊण पढममेकंकम्। देऊण बाणपंतिट्ठिएहिं छट्ठिं कुणेहि अंकेहिं॥ काऊण एक्कभावं पंचमपंतिट्ठिए अंकम्। पढकोट्ठं सुअइवरो चौत्थिं पंतिं च कुणउ परिपुण्णम॥ [illegible] भेआ मत्ता वण्णा लहुआ तथा गुरुआ। एदे छप्पंतिकआ पत्थारा होंति वित्थारा॥ जत्थ ण हत्थि ण वठभाइ वठभाइ चित्तं च सुत्तसारिच्छम्। तं मत्तामक्कडिअं दट्ठूण ण को ण वठभए सुकई॥ अट्ठोहिट्ठं जइ वा मेरुज्जुअलं जहा पडाआ वा। मक्कडिआ वि तहच्चिअ कोदूहलमेत्तकारिणी भणिआ॥ इअ लच्छिणाहकइणा रइए वहरे पबंधम्मि। पत्थपंचअबंधं पेक्खह छंदस्स सव्वस्सम्॥" इति। संस्कृतं यथा—"या पिङ्गलेन कविना न निबद्धा चात्मनो ग्रन्थे। तां मात्रामर्कटिकां

लक्ष्मीनाथेन विरचितां भणत ॥ मात्रासङ्ख्यया कोष्ठं कुरु पङ्क्तिषट्कं प्रसार्य्य । तत्र द्व्यादिकानङ्कान् धारय प्रथमपङ्क्तौ विचारयित्वा ॥ आद्याङ्कं परित्यज्य सर्वपङ्क्तिमध्ये । पूर्वयुगलसदृशाङ्कान् धारय द्वितीयपङ्क्तौ विचारयित्वा ॥ प्रथमपङ्क्तिस्थिताङ्कैर्द्वितीयपङ्क्तिं पूरय । यो योऽङ्को यत्र पतति तं तत्रैव तृतीयपङ्क्तौ भण ॥ प्रथमे द्वितीयमङ्कं द्वितीयकोष्ठे च पञ्चममङ्कम् । दत्त्वा आद्यद्विगुणं तद्द्विगुणं तृतीयचतुर्थयोर्देहि ॥ कृत्वा एकभावं पञ्चमपङ्क्तिस्थितानङ्कान् । दत्त्वा एकमङ्कं कुरु तत्रैव पञ्चमं पूर्णम् ॥ त्यक्त्वा पञ्चममङ्कं पूर्वस्मिन् एकभावमापन्ने । दत्त्वा एकमधिकं षष्ठं कुरु परिपूर्णम् ॥ कृत्वैकभावं पञ्चमपङ्क्तिस्थितानङ्कान् । त्यक्त्वा पञ्चदशाङ्कमेकं छित्वा कुरुष्व मुनिकोष्ठम् ॥ एवं निरवधिमात्राप्रस्तारे अङ्कपरम्परा । भवतीति तेन कविना न कृतोऽङ्कानां विस्तारः ॥ एवं पञ्चमपङ्क्तिं पूर्णां कृत्वा प्रथममेकाङ्कम । दत्त्वा आद्यपङ्क्तिस्थितैः षष्ठीं कुरु अङ्कैः ॥ कृत्वा एकभावं पञ्चमपङ्क्तिस्थितानङ्कान् । प्रतिकोष्ठं सुकविवरः चतुर्थीं पङ्क्तिञ्च कुरु परिपूर्णाम् ॥ वृत्तं भेदो मात्रा वर्णा लघुकास्तथा गुरुकाः । एते षट्पङ्क्तिकृताः प्रस्तारा भवन्ति विस्ताराः ॥ यत्र च दृष्टौ अवबुध्यते बध्यते चित्तञ्च सूत्रसहस्रम् । तां मात्रामर्कटिकां दृष्ट्वा च को न बध्यते सुकविः ॥ नष्टोद्दिष्टं यथा वा मेरुयुगलं यथा पताका वा । मर्कटिकाऽपि तथैव कौतूहलमात्रकारिणी भणिता ॥ इति लक्ष्मीनाथकविना रचिते रुचिरे प्रबन्धेऽस्मिन् । प्रत्ययपञ्चकबन्धं पश्यत छन्दसः सर्वस्वम् ॥" इति । अथ तत्रैकमात्रादिनिरवधिकमात्राप्रस्तारेषु कतिकतिजातिसम्बन्धिवृत्तादयो भवन्तीति प्रश्ने कृते मात्रामर्कटिकया प्रत्युत्तरं देयमिति तद्विरचनप्रकारो लिख्यते । तत्र प्रथमपङ्क्तिसाधनोपायमाह—स्वाभिमतमात्रासङ्ख्यया पङ्क्तिषट्कं यथा स्यात्तथा कोष्ठकं कुरु, ततः प्रथमायां वृत्तपङ्क्तौ यावदिच्छं क्रमेण द्व्यादिकानङ्कान् स्थापय । सर्वासां पङ्क्तीनां मध्ये प्रथमाङ्कं परित्यज । अत्रैवञ्च प्रतिभाति, 'सर्वकोष्ठेषु प्रथमाङ्कत्यागो न सर्वकोष्ठत्यागपरः, किन्तु षष्ठगुरुपङ्क्तिप्रथमकोष्ठत्यागपरः, तत्र गुरोरभावात् । अतश्च सम्प्रदायात् पञ्चसु कोष्ठेषु प्रथमाङ्कविन्यासः अवश्यं कर्त्तव्य एव, अन्यथा वक्ष्यमाणाङ्कविन्यासभङ्गापत्तेः । एवं कृते प्रथमा वृत्तपङ्क्तिः सिध्यति । अथ द्वितीयां प्रभेदपङ्क्तिं साधयति—एकद्वित्रिपञ्चाष्टादीन् अङ्कानवशिष्टान्यायेन क्रमशो धारय; एवञ्च द्वितीयप्रभेदपङ्क्तिः सिध्यति । अथ तृतीयां मात्रापङ्क्तिं साधयति—प्रथमपङ्क्तिस्थिताङ्कैः द्वितीयपङ्क्तिस्थानामङ्कानां गुणने यो योऽङ्कः यत्र पतति तं तं तृतीयपङ्क्तौ धारय, एवं तृतीया मात्रापङ्क्तिः

सिध्यति। अथ क्रमप्राप्तां चतुर्थीं वर्णपङ्क्तिमुल्लङ्घ्य युगपदेव चतुर्थषष्ठपङ्क्त्योः साधनार्थं तन्मूलभूतां पञ्चमीं लघुपङ्क्तिं साधयति, तत्र प्रथमे द्वितीयमङ्कं, षट्स्वपि पङ्क्तिषु प्रथमकोष्ठत्यागात् द्वितीयकोष्ठमेवात्र प्रथमं कोष्ठम, अतः पञ्चमेव द्वितीयमङ्कं, तदपेक्षया द्वितीयकोष्ठे च पञ्चमाङ्कं दत्त्वा ततो वाणद्विगुणं दश तद्द्विगुणं विंशतिश्च इत्येतौ द्वावङ्कौ तृतीयचतुर्थकोष्ठयोः विन्यसनीयौ। ततः पञ्चमपङ्क्तौ स्थितान् द्व्यादीनङ्कानेकीकृत्य तस्मिन् एकमधिकं दत्त्वा ततश्च निष्पन्नेन अष्टविंशता पूर्वापेक्षया पञ्चमं कोष्ठं पूर्णं कुरु। ततः पूर्वस्मिन् द्व्यादिके पञ्चमपङ्क्तिस्थिताङ्के एकीकृते सति ततः पञ्चममङ्कं त्यक्त्वा पुनस्तत्रैकमधिकं दत्त्वा पूर्ववत् जातेन एकसप्तत्या षष्ठं कोष्ठं पूरय। ततः पञ्चमपङ्क्तिस्थितान् द्व्यादीनेकीकृत्य तस्मात् पञ्चदशाङ्कं त्यक्त्वा तेष्वपि एकं परित्यज्य सप्तमकोष्ठं त्रिंशदुत्तरेण शतेन पूर्णं कुरु। अथ पञ्चमपङ्क्तौ द्व्यादिकान् सप्तमकोष्ठावधिस्थितानङ्कानेकीकृत्य तेषु एकचत्वारिंशदङ्कं त्यक्त्वा जातेन पञ्चत्रिंशदधिकशतद्वयेन अष्टमं कोष्ठं पूरय। अथ द्व्यादिकान् अष्टमकोष्ठावधिस्थितान् अङ्कानेकीकृत्य तेषु एकनवत्यङ्कं विहाय निष्पन्नेन विंशत्यधिकचतुःशताङ्केन नवमं कोष्ठं पूरय। ततः द्व्यादिकान् नवमकोष्ठावधिस्थितानङ्कानेकीकृत्य ततः सप्ताशीत्यधिकशताङ्कं वियुज्य अवशिष्टेन चतुश्चत्वारिंशदधिकसप्तशताङ्केन दशमकोष्ठपूरणं कुरु। एवञ्च चतुर्थषष्ठपङ्क्तिगर्भा पञ्चमी लघुपङ्क्तिः सिध्यति। अथ षष्ठगुरुपङ्क्तिसाधनप्रकारो यथा—तत्र गुरुस्थानीयं प्रथमकोष्ठकं विहाय अग्रिमकोष्ठे प्रथममेकाङ्कं दत्त्वा पञ्चमपङ्क्तिस्थितैर्द्व्यादिभिरङ्कैः षष्ठीं पङ्क्तिं पूरय। एवं षष्ठी गुरुपङ्क्तिः सिध्यति। अथ उर्वरितचतुर्थवर्णपङ्क्तिपूरणप्रकारो यथा—पञ्चमषष्ठपङ्क्तिस्थितान् द्व्यादीनङ्कानेकीकृत्य प्रतिकोष्ठं चतुर्थीं पङ्क्तिं पूरय। अत्र षष्ठपङ्क्तौ आदिकोष्ठे अङ्काभावात् चतुर्थपङ्क्तिप्रथमकोष्ठे एकाङ्कः एव देयः, एवं कृते चतुर्थी वर्णपङ्क्तिः सिध्यतीति। अङ्कविन्यासप्रणाली यथा—

| | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| वृत्तपङ्क्तिः | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ |
| प्रभेद ,, | १ | २ | ३ | ५ | ८ | १३ | २१ | ३४ | ५५ | ८९ | १४४ |
| मात्रा ,, | १ | ४ | ९ | २० | ४० | ७८ | १४७ | २७२ | ४९५ | ८९० | १५८४ |
| वर्ण ,, | १ | ३ | ७ | १५ | ३० | ५८ | १०९ | २०१ | ३६५ | ६५५ | ११६४ |
| लघु ,, | १ | २ | ५ | १० | २० | ३८ | ७१ | १३० | २३५ | ४२० | ७४४ |
| गुरु ,, | | १ | २ | ५ | १० | २० | ३८ | ७१ | १३० | २३५ | ४२० |

इति श्रीमज्जीवानन्दविद्यासागरकृतायां पिङ्गलच्छन्दःसूत्रे हलायुधकृतौ मृतसञ्जीविन्याम् अष्टमोऽध्यायः।

# परिशिष्टम् ।

अथ मात्राप्रस्तारे प्राकृतपिङ्गलाद्युक्तानां षट्कलादीनां गणव्यवस्थायां अथ प्रदर्श्यन्ते यथा—

## षण्मात्रष्टः ॥१॥

अस्य त्रयोदश भेदाः, यथा—⏑ ⏑ ⏑ हरः (१) - - ⏑ ⏑ शशी (२) - ⏑ - ⏑ सूर्यः (३) ⏑ - - ⏑ शक्रः (४) - - - - ⏑ शेषः (५) - ⏑ ⏑ - अहिः (६) ⏑ - ⏑ = कमलः (७) - - - ⏑ - धाता (८) ⏑ ⏑ - - कलिः (९) - - ⏑ - - चन्द्रः (१०) - ⏑ - - = ध्रुवः (११) ⏑ - - - - धर्मः (१२) - - - - - - शाली (१३)।

## पञ्चमात्रष्ठः ॥२॥

अस्याष्टौ भेदाः, - ⏑ ⏑ इन्द्रासनम् (१) ⏑ - ⏑ सूर्यः (२) - - ⏑ चापः (३) ⏑ ⏑ - हीरः (४) - - ⏑ - शेखरः (५) - ⏑ - - कुसुमम् (६) ⏑ - - - अहिगणः (७) - - - - - पापगणः (८)।

## चतुर्मात्रो डः ॥३॥

अस्य पञ्च भेदाः, ⏑ ⏑ कर्णः (१) - - ⏑ करतलः (२) - ⏑ - पयोधरः (३) ⏑ - - वसुचरणः (४) - - - - विप्रः (५)।

## त्रिमात्रो ढः ॥४॥

अस्य भेदास्त्रयः, - ⏑ रसवासः (१) ⏑ - पवनः (२) - - - वलयम् (३)।

## द्विमात्रो णः ॥५॥

अस्य भेदौ द्वौ, यथा—⏑ हारः (१) - - सुप्रियः (२)।

अथ प्राकृतपिङ्गलाद्युक्ता आर्यादीनां गणच्छन्दसां वैतालीयादीनां मात्राच्छन्दसाञ्च कतिचित् सोदाहरणभेदाः प्रदर्श्यन्ते, यथा—

## आर्याभेदान्तर्गता उद्गीतिर्विगाथा ॥६॥

उदा०—तरणितनुजातीरे चीरेऽपहृतेऽपि चीरेण। हिमनीरे रमणीनामकुटिल-चीरेव मनसि संभृते (?)॥

## उपगीतिर्गाहुः ॥७॥

## गीतिरुद्गाथा ॥८॥

### यत्र द्वादशाष्टादशमात्रं प्रथमार्द्धं द्वादशविंशति-मात्रं द्वितीयार्द्धं सा गाहिनी ॥९॥

उदा०—स जयति मुरलीवादन (१) केलिकलाभिर्विमोहयन् गोपीः। (२) वृन्दावनाङ्गभूमौ (३) रासरसाञ्चितविबुधार्चितचरणमुखः॥ (४)

### विपरीता सिंहिनी ॥१०॥

उदा०—वन्देऽरविन्दनयनं (१) वृन्दारकवृन्दवन्दितपदाम्भोजम्। (२) मन्दानन्द-निदानं (३) नवजलधररुचिरमिन्दिरारमणम्॥ (४)

### द्वादशविंशतिमात्राभिः स्कन्धकार्द्धम् ॥११॥

उत्तरार्द्धमपि तथा। उदा०—राधामुखाब्जतरणिः (१) तरणिः संसारसागरो-त्तरणविधौ। (२) स जयति निजभक्तानां (३) कामितदाता दुरन्तशक्तिमहायः॥ (४) अस्या भेदा अष्टाविंशतिसङ्ख्याकाः प्राकृतपैङ्गले द्रष्टव्याः। इति गाथाप्रकरणम्।

### ट-ड-ढाष्ट-ड-ला दोहार्द्धम् ॥१२॥

उत्तरार्द्धमपि तथा। उदा०—गौरीवर (ट) चितततु (ड) सकल (ढ) मलकरा (ट) जितग (ड) रु (ल)। (१) जय वृषभ (ट) ध्वज पुर (ड) मथन (ढ) महादेव (ट) नि:स (ड) रु (ल)॥ (२) लघुगुरुसन्निवेश-विशेषादस्यास्त्रयोविंशतिभेदाः प्राकृतपैङ्गलेऽनुसन्धेयाः।

### रुद्रमात्राभिः षट्पदी रसिका ॥१३॥

उदा०—जय जय हर वृषगमन (१) तरणिदहनविधुनयन (२) नयनदहनजित-मदन। (३) निजशरकृतपुरकदन (४) मम हृदयगततपनय (५) मविनयमधिकमप-नय॥ (६) अत्रापि लघुद्वयस्यैकगुरुकरणात् अष्टौ भेदाः स्युः।

### एकादशत्रयोदशयतिकचतुर्विंशतिमात्रा चतुश्चरणा चतुष्पदी रोला ॥१४॥

उदा०—अरिगणमभितापयति विबुधलोकानुपगच्छति (१) वरधीविवरग-भुजगनिकरमभितापिगच्छति। (२) सकलदिगीशपुरमभि निजतापैरभियोजयति (३) भूप! तव प्रतापस्तव कीर्त्तिं न शोषयति॥ (४) अस्य भेदास्त्रयोदश।

### यमकितसप्तदशाक्षराष्टादशाक्षरपादाभ्यां गन्धानार्द्धम् ॥१५॥

उत्तरार्द्धमपि तथा। उदा०—गर्जति जलधरः परिकूजति शिखिनिवहः (१)

नीपवनीमवधूय वहति दक्षिणगन्धवहः। (२) दूरे दयितः सखि! किमिह हि करवै (३) प्रज्वालय दहनं झटिति शमभमनुकरवै ॥ (४)

## सगैः सप्तडकारैश्चतुष्पदी ॥१६॥ चौपैया।

उदा०—चेतः! स्मर मदि-तं कम-लामदि-तं दा-रितदा-कणकं सं (१) हतपे मृग-दा-नयनि-श्यामा-नवनृप-गनमा-ममई-मम। (२) यमुना-तरणी-रे तव-सुमनी-रे का-रितगो पीता-सं (३) भवभा-धाहर-णं वा-धारम-णं क-न्दकुसुम-समहा-सम ॥ (४)

## सम्पूर्णैश्चतुष्पद्यन्या चतुष्पदी ॥१७॥

पूर्वोक्तचतुष्पदैर्यस्या एकः पादः सम्पद्यते तादृशपादैश्चतुष्पदी द्वितीया चतुष्पदीत्यर्थः। उदा०—व्रज गो-कुलपा-लं बा-लितबा लं वा-दितमृदु-रवबं-शं, रोचन-युतभा-लं धृत-वनमा-लं श्री-मितनर-सवतं-शं, दितिज-व्रजकी-लं वा-दितता लं क्षत-सुरमुनि-गणशं-सं, रुचिरक-लितमा-लं गित-घनशा-लं भा-सितया-दववं-शम। (२) सरसी-रुहनय-नं जग-तामय-नं क गठनल-ल्थितहा-रं, धृतगो-पसुवे शं कु-ञ्चितके-शं खित-जितनव-घनसा-रं, जितनय-नचको-रं न-न्दकिशो-रं गो-पीमा-नसचो-रं, क्षतरा-धाधा-रं स-ञ्जनता-रं दिति-सुतना-शकठो-रं (३) नवकलि-तकद-म्बं जग-दवल-म्बं से-वितयमु नातो-रं, वन्दित-सुरवृ-न्दं जग दान-न्दं गो-पीजन-हृतचो-रं, धृतधर-णीवल-यं कद-खानिल-यं द-नुविनि र्जितहो-रं, भवभा गरपा-रं भुव-नागा-रं न-न्दसुतं शरदो-रम ॥ (४) प्रथमया सह मेलनादियं चतुष्पदी सम्पूर्णा।

## सप्तडकारान्ते वलयं ( - - - ) दशाष्टत्रयोदश-यतिकमित्थं द्विपदी घत्ता ॥१८॥

उदा०—भवभा-धाहर-णं रा-धारम णं न-न्दकिशो-रं स्मर हृदय!। (१) यमुना-याको-रे तर-लसमो-रे कृत-वररा-सं त्वम-नुसर ॥ (२)

## ट-डत्रय-ठ-डद्वयैरेकत्रिंशत्कलः एकादशसप्तत्रयोदशयतिकः इत्थं द्विपदी घत्तानन्दः ॥१९॥

उदा०—दितिसुतविर (ट) हगम्न (ड) नमसुख (ड) भञ्जन (ड) मनुगतज (ठ) नताप (ड) हरणम्। (ड) (१) निखिलमान (ट) सरस्र (ड) नमतिनि (ड) रञ्जन (ड) मस्तु किम (ठ) पि मह: (ड) शरणम् ॥ (ड) (२)

## यत्र द्वौ टकारौ सत्र-विप्रान्यतमडत्रयमध्यौ रुद्रत्रयोदशयतिकौ इत्थं चतुष्पदं काव्यम् ॥२०॥

उदा०—मूर्ध्नि विरा (ट) जितच (ड) न्द्र चन्द्र (ड) कलोप (ड) मतिलकवर (ट) (१) तिलकदहन (ट) वरनय (ड) न नयन (ड) जितमद (ड) नमनोहर। (ट) चमरनिकर (ट) कृतमन (ड) ननमन (ड) निरवधि (ड) करुणाकर (ट) (३) करधृतमनु (ट) जकला (ड) परिवुध (ड) जनतिमि (ड) रविभाकर ॥ (ट)

## डत्रय-ढ-ट-ड-ढैर्वसुपञ्चमात्राकैश्चतुष्पदम् उल्लालम् ॥२१॥

## काव्यपादचतुष्टयोल्लालद्विपदैः षट्पदी ॥२२॥

उदा०—जय जय न (ट) न्दकुमा (ड) र मार (ड) सुन्दर (ड) वरलोचन (ट) (१) लोचनजित (ट) नवक (ड) ञ्ज कञ्ज (ड) निभभय (ड) भवमोचन (ट) (२) नूतनजल (ट) धरनी (ड) लशील (ड) भूषित (ड) गतदूषण (ट) (३) दूषणहर (ट) धृतमा (ड) लभाल (ड) भूषित (ड) वरभूषण (ट) (४) दूषण (ड) गणनिह (ड) मम निखि (ड) लमपि (ढ) कुरु दूरे (ट) नन्दकि (ड) शोर (ढ) (५) तव चर (ड) णकमल-युगलम (ड) नुदिन (ढ) मनसेवे (ट) नयनच (ड) कोर ॥ (ढ) (६)

## जान्तडचतुष्टयचतुष्पदी पज्झटिका ॥२३॥

उदा०—गाङ्गं (ड) वन्दं (ड) परिजय (ड) ति वारि (ज) (१) निखिलज (ड) नानां (ड) सुदुरित (ड) निवारि। (ज) (२) भवमुक (ड) टविरा (ड) जि जटा (ड) विहारि (ज) (३) मज्ज (ड) ज्जनमा (ड) न-मता (ड) पहारि ॥ (ज) (४)

## सैव भान्ताऽडिल्ला प्रथमद्वितीययोस्तृतीय-चतुर्थयोश्च यमकिता ॥२४॥

उदा०—हरिरुप गत इह सखि मयि वेदय (१) कुञ्जगृह-होदर-गतमपि खेदय। (२) इह यदि मपदिश-विधमुप-याच्यति (३) रसरस-नामृत-मिदमनु-याच्यति ॥ (४)

## डचतुष्टयपूर्ववत् यमकितपादाकुलकम् ॥२५॥

उदा०—जलधर-दानह-रितवन-भागः (१) शीतल-मारुत-कृतपर-भागः। (२) चञ्चल-चपला धृतवन-मालः (३) समुपा-गत इह जलधर-कालः ॥ (४)

## षोडशचतुर्दशमात्राभिश्चौयालार्द्धम् ॥२६॥

उत्तरार्द्धमपि तथा। उदा०—दिशि दिशि विलसति जलधरगर्जित (१) मथ तां केका राजयते। (२) सा मम चेतः कुरुते तर्जित (३) मपि का कान्तो भावयते ॥ (४)

यत्र ढ-डद्वय-जकारैः प्रथमः पादः, लद्वयान्त्यडत्रयेण द्वितीयः, ढ-डचयेण तृतीयः, ढ-डद्वयेन चतुर्थः, तृतीयवत्

पञ्चमः, पदपञ्चकान्ते दोहापादचतुष्टयम् इत्थं नवपदी रड्डा ॥२७॥

उदा०—विकच (ढ) नलिदल—मुविलस—ति हिम्मु (ज) (१) किंशुक—कलिका विकसति (२) वहति (ढ) मलयज—हृदयम—पि सुखम् (३) विकल (ढ ) अलिरपि कलयति (४) विकच (ढ) वि मञ्जु—लमञ्ज—रिरपि च। (५) इति मधुरगुवनमनुसरति (६) बहुलीभूय सुकेशि (७) हरिरपि विलसति चरणयुग (८) मनुसर तं हृदयेशि ! ॥ (९)

भजवसुडैश्चतुष्पदी पद्मावती ॥२८॥

उदा०—करयुग—धृतवं—शी रुचि—रवतं—सो गो—वर्द्धन—धारण—शील (१) प्रियगो—पविहा—री भव—भर्ता—री वृ—न्दावन—विरचित—लीलः। (२) धृतवर—वनमा—लो निज—जनपा—लो वर—यमुना—जलरुचि—शाली (३) मम म—ङ्गलदा—यी कृत—भवमा—यी वर—भूषण—भूषित—भाली ॥ (४)

यत्र दोहाचरणचतुष्टयेन पूर्वार्द्धं काव्यचरणचतुष्टयेनोत्तरार्द्धं दोहाशेषचरणकाव्याद्यचरणैकदेशाभ्यां काव्यद्वितीयतृतीय-पादाद्ययतिभ्याञ्च यमकयुक्तं सा कुण्डलिका ॥२९॥

उदा०—चरणं शरणं भवतु तव (१) मुरलीवादनशील ! (२) सुरगणवन्दित-चरणयुग ! (३) वनभुवि विरचितलील ! (४) वनभुवि विरचितलील ! (५) दुष्टजन-खण्डनपण्डित ! (१) दुर्जनजनहृदिकील ! गण्डयुगकुण्डलमण्डित ! (२) दुर्जनजन-हृदिकील ! भीतभयतापविहरण ! (३) मुनिजनमानसहंस ! हरतु मम तापं चरणम् ॥ (४)

ट-डचतुष्टय-द्वैरर्क-त्रयोदशयतिकैश्चतुष्पदं गगनाङ्गनम् ॥३०॥

उदा०—मानसमिह (ट) मम कृ—न्तति को—किलविह—तमका—र्ण्यं (ढ) (१) कलितशरा (ट) समसा—यकमत—नुः कल—यति मा—रणम्। (ढ) (२) मधुसमये (ट) कथमपि—सखि। जी—वं निज—मपि धा—रये (ढ) (३) रुचिरमधुभि (ट) रमन्त—रा चर—णमपि वो—ढुमपा—रये (ढ) ॥ (४)

ट-डपञ्चकगैर्द्विपदी ॥३१॥

उदा०—मम मानस (ट) मभिलष—ति सखि! कृ—तरास—केलिर—

समाय—कै। (ग) (१) निजरुचिजित (ट) नूतन—जलधर—मुरली—नादमु—खदाय—कै॥ (ग) (२)

**दश-दश-सप्तदशयतिक-मुनिकलिमात्राकद्विपदमुल्लणम् ॥३३॥**

उदा०—करविधृतवंशरव-क्षतहृदयचितभव-गोकुलानन्दकरकचिररासे। (१)
मम रुचिरमुपयासि मम वचनमनुपासि मल्लवीरभिमृय जनितहासे॥ (२)

**डनवक-राभ्यां द्विपदी खञ्जा ॥३४॥**

उदा०—निजतनु-रुचिविजि तनवज-लधरव-र्चाविधृत रुचिरल-रमुकुट-हरिरिह मम हृदि भासताम्। (१) मम हृ: यमविर-तममुम-वतु तव निजचम-मुखविज-रचरचि-कचरच-सरसिज-दासताम्॥ (२)

**यत्र डषट्क-जाभ्यां डसप्तक-जाभ्याञ्च**

**पूर्वोत्तरार्द्धे सा शिखा ॥३५॥**

उदा०—विकचन-लिनगत-मधुरम धुकरक-लरवम-नुकलय सुकेशि!। (१)
हरिरिति विनमति चरणयु-गमपि म-थि कुरु हृ-दयमप-वशमति-सुवेशि!॥ (२)

**यत्र डनवक-रेफकर्णैः ( ⏑ ⏑ ) पूर्वार्द्धम्**

**आर्योत्तरार्द्धञ्च सा माला ॥३६॥**

उदा०—व्रजमहृ दयकर-युगकृत-वसनव-सनहर-चपरव-शयुवति-कृतविम-तिरभय-मानता-हासः। (१) तीरे कदम्बशाली वरवनमाली हरिः पायात्॥ (२)

**कुसुमान्त ( - ⏑ - - ) दोहापूर्वोत्तरार्द्धाभ्यां**

**चुलियाला ॥३७॥**

उदा०—चपलमुपविश वनभुवि हरे! मम पुनरागमनाव (टो) धि पालय। (१)
उपयातामिह मम सखीं तामङ्के राधामु (टो) पपालय॥ (२)

**ट-ड-लैष्ट-ढ-भैः सोरठार्द्धम् ॥३८॥**

उत्तरार्द्धमपि तथा। उदा०—रूपविजि (ट) जितमा—र! सकलयाद (ट) वकुल (ढ) पालक!। (१) जय जय न (ट) न्दकुमा—र! गोपीगो (ट) पजन (ढ) चालक!॥ (२)

**यत्र विप्र-स-भाभ्यतर-डत्रय-गैरेकादशाक्षरैः प्रथम-**

**द्वितीयपादौ स-भाभ्यतर-डत्रय-गैर्दशाक्षरैश्च**

**तृतीय-चतुर्थौ पादौ सा हाकलिः ॥३९॥**

उदा०—विकसन—यानव—वेशक—लं (१) चरणा—ङ्कितवर—मुनित—वन । (२) व्योमत—लामल—कज्जुग—लं (३) नौमि वि—भूषित—मालत—लम् ॥ (४)

ड-जाभ्यां चतुष्पदी मधुभारः ॥४०॥

उदा०—उरसि क—तमाल (ज) (१) भक्तज—नपाल (ज) । (२) रुचिजित—तमाल (ज) (३) जय न—न्दबाल (ज) ॥ (४)

डत्रय-ट-डत्रय-गैश्चतुष्पदी दण्डकला ॥४१॥

उदा०—चर के—शिनिसू—दनविनि—हतपूतन (ट) रचितदि—तिजकुल—दलकद—नं (१) वाणा—वलिना—जितस—कलपालित (ट) पार्थवि—लोकित-सुखद—नम् । (२) कलमा—यामा—नव रण—हतदानव (ट) दुस्तर—भवजल—शाशित—विं (३) सुरसि—न्धुविधा—यकया—दवनायक (ट) मधुमद—रं प्रण—मामि ह—रिम् ॥ (४)

जान्तैकादशमात्राभिश्चतुष्पद आभीरः ॥४२॥

उदा०—व्रजभुवि रचितविहार (१) श्रुतिशतकलितविचार । (२) यदुकुल-कलितनिवास (३) जय भुतजनतरास ॥ (४)

डचतुष्टय-ट-डद्वय-गैः षोडशमात्रायतिकै-
श्चतुष्पदी कामकला ॥४३॥

उदा०—कमला-करला-लितपद-कमलं निजजनहृद (ट) यविना-शितशम-लं (१) पीतव-सनपरि-भासित ममलं जितकम्बुम (ट) नोहर-विमलग-लम् । (२) शाभिक-मलगत-विधिकृत-नमनं फणिमणिकु (ट) ण्डलम-ण्डितवद-नं (३) नौमि क-लधिशय-नविरचि-सदनं दानवनिव (ट) हसमर-कृतकद-नम् ॥ (४)

भज ( -‿- ) डसमक-गै रुचिरार्द्धम् ॥४४॥

उत्तरार्द्धमपि तथा । उदा०—कस्य त-नुर्मनु-जस्य सि-तासित-सक्रम-वीचिवि-तः पूति-ता । (१) यस्य क-ते कर-मोद ! वि-सोदसि निद्दिरा-तपनिहि-तेव ल-ता ॥ (२)

ड-लद्वय-जैश्चतुष्पदं दीपकम् ॥४५॥

उदा०—शैवलि-रचि-तहार ! (१) पिट्टका-नन-विहार ! (२) जय जय हर ! सदैव ! (३) गौरी-कृत-सुवेश ! ॥ (४)

स-द्विजान्यतर-डैश्चतुर्भिश्चतुष्पदं सिंहावलोकितम् ॥४६॥

उदा०—इन्दू-वदन-जलनिधि-तरङ्गं (१) व्रजभुवि कृतदा-नवकुल-मरणम्। (२) रविरिव-तमसा-समभ-कुमारं (३) करकलित-तम्बुरी नम हे-वरम्॥ (४)

## गादि-ट-ठ-ड-ज-गैश्चतुष्पदः प्लवङ्गमः ॥४७॥

उदा०—कुञ्चितच (ट) ञ्चलकुन्त (ठ) लकलित—वदन (ज) मं (१) वेणुविरा (ट) वविनोद (ठ) विमोहि—तकान (ज) नम्। (२) मञ्जुलना (ट) यकदान (ठ) वखण्ड—मर्पाण्ड (ज) तं (३) चिन्तय च (ट) ञ्चकरोप (ठ) मकुण्ड—लमण्डि (ज) तम्॥ (४)

## डाष्टकैश्चतुष्पदी लीलावती ॥४८॥

उदा०—गुञ्जा-कृतभू-षणमखिल-जगन्नह-तरूप-समधिक-कृतरा-सकलं (१) करयुग-धृतमुर-लिं नव-जलधर-नीलं वृन्दा वनभुवि चपलम्। (२) हतगो-पीमा-नं मा-रदकृत-गानं लीला-बलदै-वयुतं (३) भर न-न्दतनू-जं सुर-वरकृत-पूजं मम हृद-य! मुनिजन-नुतम॥ (४)

## ठ-ट-ठत्रय-गैरष्टाविंशतिमात्रकं हरिगीतम् ॥४९॥

उदा०—रचय कर (ठ) णीदलनव (ट) शयनं क (ठ) मलदला (ठ) वलि-मालि (ठ) तं (१) बीजय म (ठ) दुपवनेन (ट) घनाघन (ठ) सुन्दरवि (ठ) रहदालि (ठ) नम्। (२) चङ्क्रम (ठ) पि घनसार (ट) विराजित (ठ) चन्दनर (ठ) चनलालि (ठ) तं (३) कुरु मम व (ठ) चनमानय (ट) कमलान (ठ) नवनमा (ठ) लिनमालि! (ठ) नम्॥ (४)

## गद्वयान्तनियतन्त्वहरगीतम् ॥५०॥

उदा०—उरसि विल (ठ) सितानुपम (ट) मणिगणक (ठ) मधुकरक (ठ) लयुतमा (ठ) लं (१) मुनिजनय (ठ) मनियमादि (ट) विनाशक (ठ) सकलदन (ठ) जकुलका (ठ) लम्। (२) सुरवीर (ठ) वमोहनम (ट) नुमोदित (ठ) निखिल-भुव (ठ) तिकृतरा (ठ) सं (३) विनमतु म (ठ) म हृदि किमपि (ट) गोपिका (ठ) मानसक (ठ) लितविला (ठ) सम्॥ (४)

## नव-सप्त-द्वादशयतिकश्चेद्धरिगीता ॥५१॥

उदा०—भुजगपरि (ठ) वारित, इव (ट) मवारित, (ठ) स्तवलस (ठ) दविराजि (ठ) तं (१) कृतमदन (ठ) गञ्जन-मधु (ट) मभञ्जन, (ठ) सुरमुनिग (ठ) णसभाजि (ठ) तम्। (२) हिमकिरण (ठ) भावित-दश (ठ) नभूषित, (ठ) भावसुम (ठ) या सख (ठ)

तं (३) धृतशान्ति (ठ) वासव-मन (ट) जमानस, (ठ) मनुवर सु (ठ) खदमङ्ग ! (ठ) तम् ॥ (४)

## सजाष्टडैर्दश-वसु-वसु-ऋतुयतिकैश्चतुष्पदी त्रिभङ्गी ॥५२॥

उदा०—वरसु-क्षाहा-रं हृदि कलभा-रं विर-चितभा-रं कुच-सुषितं (१) कादम्ब विधुवि-म्बं न कु-च विल-म्बं हर निकुर-म्बं काम सकृतम् । (२) अहि मल-यजपव-नं लघु लघु वह-नं तनु-कनदह-नं मो-हकरं (३) मम चि-त्तमधी-रं रद-जितहो-रं यदु वरवी-रं या-ति परम ॥ (४)

## दशाष्टचतुर्दशयतिकैर्वसुडैश्चतुष्पदी दुर्मिलका ॥५३॥

उदा०—हैय-कुवचो-रं न-न्दकिशो-रं, त-स्कुलकम-लविसम-दमनं (१) घनकु-ञ्चितकै-शं न-ष्ठुलवे-शं विजि-तमनुज-सुरवाचि-सदनम् । (२) अपरि-स्फुटगद-नं दधि-युतवद-नं नौ-मि दितिज-वरसक-टहरं (३) मुक्ता-भूषा लक्रम-द्रुतवा-लकमखि-लमुनिज-महृदि सु-खकरम् ॥ (४)

## यमकितगादि-टत्रय-राभ्यां ( ‿ - ‿ ) प्रथमद्वितीययोस्तृतीय-चतुर्थयोश्चान्त्ययमकितश्चतुष्पदी हीरः ॥५४॥

उदा०—चन्द्रवदन (ट) कुन्दरदन (ट) मन्दहसन (ट) भूषणं (र) (१) भीतिकदन (ट) नीतिसदन (ट) कान्तिमदन (ट) दूषणम् । (र) (२) धीरमतुल (ट) हीरबहुल (ट) चीरहरण (ट) पण्डितं (र) (३) नौमि विमल (ट) धूतकमल (ट) नेत्रयुगल (ट) मण्डितम् (र) ॥ (४)

## सप्तद्विज ( - - - - ) सैर्दश-वसु-वसु-ऋतुयतिकैश्चतुष्पदं जनहरणम् ॥५५॥

उदा०—वरजल-निधिजल-शय निज-पदरुचि-चय सुर-गणहृत-भय गत-कुमते ! (१) वसुदिति-सुतकुल-हर निज-जनसुख-कर सुर-मुनिगण-वर कृत-सुमते ! । (२) कमलक-मलमुख-घन रुचि-धृतसुर-धन कुरु मनिभव-धन सुख-करणं (३) तव भव-तु पदक-मलमधि-कतरवि-मलसुख-दशभयु-गलभव-तरणम् ॥ (४)

## लद्वय-डनवक-गैर्दश-वसु-चतुर्दश-वसुयतिकैश्चतुष्पदं मदनगृहम् ॥५६॥

उदा०—कर-कलितक पालं धृतनर-मालं भाल-ज्वलन-ज्वलद-नं कृत-रिपु-

कन्द-नं (१) भव-भयभञ्ज-हरणं गिरिजा-रमणं सकलज्ञ-नमस्तुत-शुभचरि-तं गुण-गण-भरि-तम्। (२) धृत-फणिपति-हारं त्रिभुवन-सारं दमन-खलचय-संघु-ष्टं रस-पीयू-षं (३) गल-राजित-गरलं गङ्गा-विमलं कैला-साचल-धामक-रं प्रण-मामि ह रम्॥ (४)

## ट-डपञ्चक-ग-लैर्गवस्वैकादशयतिकैश्चतुष्पदं महाराष्ट्रम् ॥५७॥

गर्वाविलि (१) (ट) भासुर हतकं-भासुर भुवि क्षत-विमलवि-लास (१) मुरलीभा (ट) सुरकर हवभा सुरहर वरतरु-पीञ्जल-रास। (२) दावानल (ट) बालक-गोधन-पालक हिमकर-करनिभ-हास (३) कृपया कुरु (ट) हष्टिं मयि सुख-वृष्टिं सुजनहृदि शानतवि-काश॥ (४)

## भसप्तक-गाभ्यां चतुष्पदी मदिरा ॥५८॥

उदा०—भालवि-राजित-चन्द्रक-लं नय-मानस-दाहित-कामव-रं (१) बाहु-वि-राजित-शैवफ-णीन्द्रफ-णामणि-भासुर कान्तिध-रम्। (२) भूधर-राजसु-तापरि-रम्भित मण्डित-नूपुर-दण्डध-रं (३) नौमि म-हेश्वम-शेषसु-रर्षिव-लक्षण-वेशमु-मेशह-रम्॥ (४)

## सैव गान्ता मालती ॥५९॥

उदा०—चन्द्रक-चारुच मत्कृति-चञ्चल-मौलिवि-लुम्पित-चन्द्रक-शोभं (१) बन्धन-बौलवि-भूषण भूषित नन्दसु-तं बनि-ताधर-लोभम्। (२) धेनुक-दानव-दारण-दक्षद शानिधि-दुर्गम-वेदर हस्य (३) नौमि ह रिं दित जावलि मालित-भूमिभ-रापनु-दं सुय-शस्यम्॥ (४)

## साष्टक-गाभ्यां चतुष्पदी मल्ली ॥६०॥

उदा०—गिरिरा-जसुता कमनी-यमन-ऋषिभ-ङ्कणकरं गलम-न्यकमा-लं (१) परिधू-तनगा-शिनवा-ससमु-ज्ज्वलमू-त्यकरं विगरहो-तकपा-लम्। (२) गरला-गल-भू-षितदो-र्दधया-लुमद-भ्रमटो-हतदा-नवको-लं (३) प्रणमा-मि विधो-ज्जटा-तट-गु-म्फितशे-षकला-निधिला-क्षितभा-लम्॥ (४)

## जसप्तक-लगैश्चतुष्पदी मल्लिका ॥६१॥

उदा०—धुनोति मनो म-न कम्पि-तकान-नकम्पि-तकोकि-रवं प-वनः (१) कथा-म-पि नैव करोमि तथापि हथा क-दनं कु-रुते म-दनः। (२) कथामि-धिरेव वचाद-

पि मुच ति बङ्कि-कलाप-मलीक-हिम: (३) विधेहि तथा म-तिमीति यथा स-विधे न-यथा व्र-जभूम-हिम: ॥ (४)

## सैव गान्ता माधवी ॥६२॥

उदा०—विलोल विलोच-नकोण-विभाति-तमोहि-तमोप-वधूग-नचिम: (१) मयूर-कलाप-विकल्पि-तमौलि-रपार-कलानि-धिवाल-चरित्र: । (२) करोति मनो म म विह्व-लमिन्दु निर्भाक्ष तमुन्द-रकुन्द-सुदन्त: (३) सखीमि-ति काऽपि जगाद हरे-र-नुराग-वशेन विभावि-तमन्त: ॥ (४)

## डाष्टकचतुष्पदी मागधी ॥६३॥

उदा०—माधव ! विदधि यं गग-ने तव कलयति पीतव-सनमभि-रामं (१) जलधर-नीलग-गनप-ङ्क्तिरपि तव तनु रुचिमनु-सरति नि-कामम् । (२) इन्द्रध-रासन-मपि तव वक्षसि भासित-वरवन माला-शोभं (३) कुरु मम वचनं सकलय हृदयं राधा-धरमधु-विरचित-लोभम् ॥ (४) मादिरादिवर्णां सवर्णेति संज्ञा ।

## ठद्वय-डद्वय-लगैश्चतुष्पदं गलितकम् ॥६४॥

उदा०—मल्लिका (ठ) ललितयूथि (ठ) पङ्कज—कुन्दक—लिके (१) कुमुदच (ठ) च्यकेत (ठ) किपरिम—लवलद—लिके । (२) मलयप (ठ) वैतशीत (ठ) लालयि जातप—वन: (३) हरिवियो (ठ) गितमोर (ठ) यं मम कथं द—हन: ॥ (४)

## ठद्वय-डद्वय-ठैश्चतुष्पदं विगलितकम् ॥६५॥

उदा०—भवजलधि (ठ) तारिणि स (ठ) कलता—पहारि—णि गङ्गे (ठ) (१) चघ-दहन (ठ) कारिणि क (ठ) चिधारि—णि हरक—तसङ्गे (ठ) । (२) गिरिनिकर (ठ) दारिणि म (ठ) नोहा—रिणि तर—लभङ्गे (ठ) (३) खपिमि वा (ठ) रिणि हंस (ठ) हारिणि—तव विल—सदङ्गे (ठ) ॥ (४)

## डद्वय-ठाभ्यां चतुष्पदं सङ्गलितकम् ॥६६॥

उदा०—घृतिमव—धारय मानसे (१) हरिमपि गततनु—मानसे । (२) सखि तव वचनं मानये (३) ननु वन—मालिन—मानये ॥ (४)

## ठद्वय-लगैः सुन्दरगलितकम् ॥६७॥

उदा०—विगलितचि (ठ) कुरविला (ठ) सिनी (१) नवहिमक (ठ) रनिभङ्गा (ठ) सिनीम् । (२) सुरनरा (ठ) धिकाल्ला (ठ) मये (३) ननुमितक (ठ) नकाङ्गा (ठ) मये ॥ (४)

## ठद्वय-ढद्वयाभ्यां भूषणगलितकम् ॥६८॥

उदा०—कांचिरवे (ठ) गुविराव (ठ) विमो (ढ) हिता: (ढ) (१) द्रुतपदा: (ठ) कृतरास (ठ) रसे (ढ) हिता:। (ढ) (२) हरिमदू (ठ) रवने ह (ठ) रिणी (ढ) चपा (ढ) (३) सकलगुण (ठ) मुरनम्य (ठ) गते (ढ) चपा: ॥ (ढ) (४)

## ट-ढचतुष्टय-गैर्मुखगलितकम् ॥६९॥

उदा०—ब्रह्मभवा (ट) दिकनु (ढ) तपद (ढ) पङ्क (ढ) जयुग (ढ) लं (१) नाशितभ (ट) कहृद (ढ) यमत (ढ) दाव (ढ) पाप्मम (ढ) लम्। (२) दीनकृपा (ट) निधिभ (ढ) वजल (ढ) राशि (ढ) तार (ढ) कं (३) नौमि हरिं (ट) कमल (ढ) नयन (ढ) मशुभ (ढ) दार (ढ) कम ॥ (४)

## ट-गान्तडचतुष्टयाभ्यां विलम्बितगलितकम् ॥७०॥

उदा०—नमामि प (ट) ङ्कजान—नं सक—लदुःख—हरणं (१) भवाम्बुरा (ट) शितार—कं निखि—लवन्द्य—चरणम्। (२) कृपाम्बुधो (ट) लकुण्ड—लं ब्रज—बन्धुज—नहितं (३) विलासहा (ट) सपेश लं सर—सराम—महितम ॥ (४)

## ड-ठद्वय-डद्वय-लगैः समगलितकम् ॥७१॥

उदा०—निखिलसु—रगणावनु (ठ) तपङ्कज (ठ) कोमल—चरणयु—गलं (१) पीतव—सनावलसि (ठ) तशरीर (ठ) मनुज—मकम्बु—गलम। (२) नौमि नि—गमपरिग (ठ) दितनपा (ठ) रगुणयु—तमिन्दु—मुखं (३) नन्दत—नूजं नि (ठ) खिलगोप (ठ) वधूज—नदत्त—सुखम ॥ (४)

## यत्र ड-ढाभ्यामयुग्मौ ट-ढचतुष्टय-ठ-गैर्युग्मौ पादौ इत्थं चतुष्पदमपरं सङ्गलितकम् ॥७२॥

उदा०—विभूति—सितं (ढ) (१) शिरसि निवसि (ट) तानु (ढ) पमम (ढ) दौभ (ट) वप (ढ) ङ्गावलसि (ठ) तम्। (२) अहिपव—चिरं (ढ) (३) शिरसि विलस (ट) ताम्र (ढ) म हृदि (ढ) वेद (ढ) रह (ढ) स्यमतिसुचि (ठ) रम् ॥ (४)

## अज-डपञ्चक-गाभ्यां चतुष्पदमपरं विलम्बितगलितकम् ॥७३॥

उदा०—राजति वंशी—हसमे—तत् का—ननदे—शे (१) गच्छति कृष्णो तत्रि—श्रय म—भुजके—शी। (२) याहि म—या सा—र्द्धमितो राधा—हितचि—त्ते (३) तत्वावि—धे प्रे—मविलो—ले ते—न च वि—त्ते ॥ (४)

## ठ-ड-ठ-ड-ठ-गैश्चतुष्पदं विचित्रिकगलितकम् ॥७४॥

उदा०—चन्द्रकान्ति (ठ) तमुकुट—मणिकमृणि (ठ) कमलद—यमुखकर (ठ) यं (१) हंतवेणु (ठ) कलं व—रभजाम (ठ) मव्या—कुलं ग्रर (ठ) याम। (२) वृन्दाव (ठ) नभूमि—षु बल्लव (ठ) नारी—मनोहर (ठ) यं (३) रुचिरं मि (ठ) लचेत—वि चिन्तय (ठ) गोप—कुंमोदर (ठ) याम ॥ (४)

## ड-ठ-ड-ठ-ड-गैर्ललितागलितकम् ॥७५॥

उदा०—कमला—पतिं कम (ठ) लमुखो—चलनिन्दु (ठ) निभान—नं (१) मञ्जुल—परिपीत (ठ) वासस—मपारगु (ठ) णकान—नम। (२) सनका—दिकमान (ठ) सजनित—मिवासस (ठ) मच्युत—तं (३) प्रणमा—मि हरिं नि (ठ) जभक्ता—जनस्य हि (ठ) ते निर—तम ॥ (४)

## यत्र ठ-ड-ठ-ड-कमलैः ( ⏑ - ⏑ - ) प्रथमद्वितीयपादौ ठत्रय-ड-सूर्यैश्च ( ⏑ - ⏑ ) तृतीयचतुर्थौ तद्विषमितागलितकम् ॥७६॥

उदा०—वेणुं क (ठ) रे कल—यता सखि! (ठ) गोपकु—मारकेण (१) पीताम्ब (ठ) रावृत—शरीरभृ (ठ) ता भव—तारकेण। (२) प्रेमोद्ग (ठ) लक्षितह (ठ) चा वनज (ठ) भूषण—शोभिना (३) चेतो म (ठ) मापि कव (ठ) लीकृतं (ठ) मानस—लोभिना ॥ (४)

## ट-विषमज-डदशकचतुष्पदं मालागलितकम् ॥७७॥

उदा०—कालियकुल (ट) विभञ्ज (ज) कमसुर—विडम्ब—कदम्बक—विलुम्प—कमखिल—जनस्तु—तमुभय—रितं मु—निनुतं (१) नौमि विमल (ट) तरं स (ज) कलसुख—करं क—लिकलुष—हरं भ—वजलधि—तरिं ह—रिं पा—वने सु—नियतम्। (२) कंसहृदि वि (ट) कटं मु (ज) निगणनि—कटं वि—निहतम—कटं प—रिधृतमु—कुटं क—गहिर—चनेऽति—चतुरं (३) भक्तजनम (ट) रणं म (ज) भयद—रणं व—रसुखक—रणं ख—पदवित—रणं ज—गन्ना—थमेव—तमधुरम ॥ (४)

## इदमेव डद्वयहीनञ्चेन्मुग्धमालागलितकम् ॥७८॥

उदा०—वन्दे न (ट) न्दनन्द (ज) ननमव-रतं न-रकातमु-तनुं धु-तचक्रिं मुरारि-मीशं (१) वादितवं (ट) शनाल (ज) तमुनिज-ममार-द्विरवि-तगान-

सवनी सधीम-नीषम । (२) कारयितवा (ट) सहास (ज) परवश-रतं वि-रचितसु-रतं वि ततकु-सुमेन पीतं (३) तं देवं (ट) प्रमोद (ज) भरमुदितं मु-दितसुर-मुतं स-ततमा-त्मजेन गीतम ॥ (४) •

## तदाऽपि उद्दयन्यूनश्चेद्गलितकम् ॥ ६८ ॥

उदा०—नन्दनन्द (ट) नमेव (ज) कलयत न किमपि दिह जग-ति सार-मपरं (१) पूर्वमिव (ट) कलव (ज) मखिलम-पि चित्र-घटितमिव भाति न परम । (२) सावधान (ट) तथैव (ज) लवमपि मनः प-रमचल-मिदं न विदितं (३) भावयन्तु (ट) दिशानि (ज) प्रमानमि-धमात्म-नि परम-पदं प्र-मुदितम् ॥ (४)

एवं गलितकान्यान्न वृत्तान्युक्तानि कानिचित् ।
लक्ष्याणि लक्ष्यमालक्ष्य शेषाणि निजबुद्धितः ॥

---



# पिङ्गलच्छन्दःसूत्रस्य सूचीपत्रम् ।

——

---

## अष्टमोऽध्यायः ३६८ १

## परिशिष्टम् ।